तत्राभिलाषविप्रलम्भमाह—

**दैवपारवश्याभ्यामाद्यो द्वेधा।**

आद्योऽभिलाषविप्रलम्भः॥

स दैवाद्यथा—

'शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथंचित्॥'

पारवश्याद्यथा—

'स्मरनवनदीपूरेणोढा मुहुर्गुरुसेतुभि-
र्यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः।

---

मन्तव्या, न तु जीवितवियोगः सुलभोदाहरणं चैतदिति। उन्मादापस्माराव्या-धीनां या नात्यन्तं कुत्सिता दशा सा काव्ये प्रयोगे च दर्शनीया, कुत्सिता तु संभवेऽपि नेति वृद्धाः। वयं तु ब्रूमः—तादृश्यां दशायां जीवितनिन्दात्मि-कायां तद्देहोपभोगसाररत्यात्मकस्थो बन्धादिर्विद्यत एवेत्यसंभव एवेति॥ **स्मरे-ति**। स्मर एव नदीपूरः प्रावृषेण्यप्रवाहः सरभसमेव प्रवृद्धत्वात्। तेन ऊढा परस्परसांमुख्यमबुद्धिपूर्वमेव नीताः। अनन्तरं गुरव एव श्वश्रूप्रभृतयः सेतवः इच्छाप्रसरनिरोधकत्वात्। अथ च गुरवोऽलङ्घ्याः सेतवस्तैर्विधृताः प्रतिहतेच्छा अत एव पूर्णमनोरथास्तिष्ठन्ति, तथापि परस्परोन्मुखतालक्षणान्योन्यतादात्म्येन स्वदेहे सकलवृत्तिनिरोधाल्लिखितप्रायैरङ्गैर्नयनान्येव नलिनीनालानि तैरानीतं रसं परम्परालक्षणमास्वादयति[3]। परस्पराभिलाषात्मकदृष्टिच्छटामिश्रीकारयुक्त्यापि

---

१. 'तिष्ठन्त्यपूर्णमनोरथा' इति वाग्भटकाव्यानुशासने.

---

१. 'अपूर्ण' स्यात्. २. 'परस्परालोकनलक्षण' स्यात्. ३. 'न्ति' स्यात्.

तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा
नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥'

प्रतिज्ञाभङ्गभीत्यापि यो न सङ्गः कादम्बर्याश्चन्द्रापीडेन, सोऽपि पारवश्यज एव ॥

मानविप्रलम्भमाह—

**प्रणयेर्ष्याभ्यां मानः ।**

प्रेमपूर्वको वशीकारः प्रणयः, तद्भङ्गे मानः प्रणयमानः । स च स्त्रियाः पुंस उभयस्य वा ।

स्त्रियाः यथा—

'प्रणयकुपितां दृष्ट्वा देवीं ससंभ्रमविस्मृत-
त्रिभुवनगुरुर्भीत्या सद्यः प्रणामपरोऽभवत् ।
नमितशिरसो गङ्गालोके तया चरणाहता-
ववतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम् ॥'

पुंसो यथा—

'अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीसैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥'

उभयस्य यथा—

'[१]पणयकुवियाण दुण्ह वि अलियपसुत्ताण माणइत्ताणम् ।
निच्चलनिरुद्धनीसासदिन्नकन्नाण को मल्लो ॥'

---

१. 'प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवतोः ।
निश्चलनिरुद्धनिश्वासदत्तकर्णयोः को मल्लः ॥' [इति च्छाया ।]

ईर्ष्यामानः स्त्रीणामेव यथा—

'संध्यां यत्प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे
धत्से यच्च नदीं विलज्ज शिरसा तच्चापि सोढं मया।
श्रीर्जातामृतमन्थने यदि हरेः कस्माद्विषं भक्षितं
मा स्त्रीलम्पट मां स्पृशेत्यभिहितो गौर्या हरः पातु वः ॥'

प्रवासविप्रलम्भमाह—

**कार्यशापसंभ्रमैः प्रवासः।**

प्रवासो भिन्नदेशत्वम्।

तत्र कार्यहेतुकः प्रवासो यथा—

'याते द्वारवतीं तदा मधुरिपौ तद्दत्तझम्पानतां
कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया।
तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥'

शापहेतुकप्रवासे मेघदूतकाव्यमेवोदाहरणम् ॥

**संभ्रमो** दिव्यमानुषविद्रादुत्पातवातादिविप्लवात् परचक्रादिविप्लवाद्वा व्याकुलत्वम्।

यथा मकरन्दयुद्धसाहाय्यं कर्तुं गतस्य माधवस्य—

'हा प्रिये, हा मालति,

किमपि किमपि शङ्के मङ्गलेभ्यो यदन्य-
द्विरमतु परिहासश्चण्डि पर्युत्सुकोऽस्मि।

---

१. 'र्यातम्बुधिमन्थने यदि हरिं' इति वाग्भटकाव्यानुशासनगतः पाठः साधुः.

कलयसि कलितोऽहं वल्लभे देहि वाचं
भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥'

हास्यमाह—

**विकृतवेषादिविभावो नासास्पन्दनाद्यनुभावो निद्रादिव्यभिचारी हासो हास्यः ।**

देशकालवयोवर्णवैपरीत्याद्विकृताः केशबन्धादयो वेषाः, आदिशब्दान्नर्तनान्यगत्याद्यनुकरणासत्प्रलापभूषणादीनि विभावा यस्य सः, तथा नासौष्ठकपोलस्पन्दनदृष्टिव्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणाद्यनुभावो निद्रावहित्थत्रपालस्यादि[१] व्यभिचारी हासः स्थायी चर्वणीयत्वमागतो हास्यः ।

स चात्मस्थः परस्थश्च । तत्रात्मस्थमाह—

**उत्तममध्यमाधमेषु स्मितविहसितापहसितैः स आत्मस्थस्त्रेधा ।**

स इति हासः ।

यद्भरतः—

'ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमानां **स्मितं** भवेत् ॥
आकुञ्चिताक्षिगण्डं यत्सस्वनं मधुरं तथा ।
कालागतं सास्यरागं तद्वै **विहसितं** भवेत ॥
अस्थानहसितं यत्तु साश्रुनेत्रं तथैव च ।
उत्कम्पितांसकशिरस्तच्चा**पहसितं** भवेत् ॥'

---

१. भरतमुनिना वाग्भटेन च तन्द्राप्यभिहिता.

परस्थमाह—

**एतत्संक्रमजैर्हसितोपहसितातिहसितैः परस्थोऽपि ।**

एतेषां स्मितादीनां संक्रान्त्या जातैर्यथासंख्येनोत्तमादिषु ।

यद्भरतः—

'उत्फुल्लाननेत्रं तु गण्डैर्विकसितैरथ[1] ।
किंचिल्लक्षितदन्तं च हसितं तद्विधीयते ॥
उत्फुल्लनासिकं यत्तु जिह्मदृष्टि निरीक्षितम् ।
निकुञ्चितांसकशिरस्तच्चोपहसितं भवेत् ॥
संरब्धसास्रनेत्रं च विकुष्टस्वरमुद्धतम्[2] ।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् ॥'

तत्रात्मस्थो हासो यथा—

'पाणौ कङ्कणमुत्फणः फणपतिर्नेत्रं ज्वलत्पावकं
कण्ठः कूटितकालकूटकुटिलो वस्त्रं गजेन्द्राजिनम् ।
गौरीलोचनलोभनाय सुभगो वेषो वरस्यैष मे
गण्डोल्लासविभावितः पशुपतेर्हास्योद्गमः पातु वः ॥'

कालमतिवाहयतीति[1] ॥ **संक्रान्त्येऽपि**[2] । परं हसन्तं दृष्ट्वा स्वयं विभावानपश्यन्नपि हसंल्लोके दृष्टः । तथा विभावादिदर्शनेऽपि गाम्भीर्यादनुदितहासोऽपि परकीयहासावलोकने तत्क्षणं हासविवशः संपद्यत एवेति । यथा अम्लदाडिमादिरसास्वादोऽन्यत्रापि दन्तोदकविकारानुरूपदर्शनात् संक्रमणस्वभावः, तथा हासोऽपि संक्रामति, नान्ये । यस्तु स्वामिशोकात्कृत्यस्य शोकः सोऽन्यः एव शोकवत्स्वामिविभावको विभावभेदात् । इह च तद्विभावक एव हास्यः संक्रामतीत्यर्थः । स्मितं हि यदुत्तमप्रकृतौ, तत्संक्रीतं[3] हसितं संपद्यते । एवं विह-

१. 'साश्रुने' भरत०. २. 'विकुष्ट' भरत०.

१. 'न्तीति' स्यात्. २. 'न्त्योत' स्यात्. ३. 'संक्रान्तं' स्यात्.

परस्थो यथा—

'कनककलशस्वच्छे राधापयोधरमण्डले
　नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् ।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिप-
　ञ्जयति जनितव्रीडाहासः प्रियाहसितो हरिः ॥'

करुणमाह—

**इष्टनाशादिविभावो दैवोपालम्भाद्यनुभावो दुःखमयव्यभिचारी शोकः करुणः ।**

इष्टवियोगानिष्टसंप्रयोगविभावो दैवोपालम्भनिःश्वासतानवमुखशोषणस्वरभेदाश्रुपातवैवर्ण्यप्रलयस्तम्भकम्पभूलुठनगात्रस्रंसाक्रन्दाद्यनुभावोनिर्वेदग्लानिचिन्तौत्सुक्यमोहश्रमत्रासविषाददैन्यव्याधिजडतोन्मादापस्मारालस्यमरणप्रभृतिदु.खमयव्यभिचारी चित्तवैधुर्यलक्षणः शोकः स्थायीभावश्चर्वणीयतां गतः **करुणो** रसः ।

यथा—

'अयि जीवितनाथ जीवसीत्यभिधायोत्थितया पुरः ।
　ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥'

इत्यादि रतिप्रलापेषु ॥

रौद्रमाह—

**दारापहारादिविभावो नयनरागाद्यनुभाव औग्र्यादिव्यभिचारी क्रोधो रौद्रः ।**

---

सितं मध्यमप्रकृतौ संक्रान्तमुपहसितम् । अपहसितमधमप्रकृतौ संक्रान्तमतिहसितमिति स्मितस्य ईषत्तायां व्यपगतायां हसितम्, ततो विशेषेण ततोऽपि

दारापहारदेशजात्यभिजनविद्याकर्मनिन्दासत्यवचनप्रभृत्याधिक्षेपोपहासवाक्पारुष्यद्रोहमात्सर्यादिविभावो नयनरागभ्रुकुटीकरणदन्तौष्ठपीडनगण्डस्फुरणहस्ताग्रनि:पेषताडनपाटनपीडनप्रहरणाहरणशस्त्रसंपातरुधिराकर्षणच्छेदनाद्यनुभाव ओग्र्यावेगोत्साहविबोधामर्षचापलादिव्यभिचारी क्रोधः स्थायिभावश्चर्वणीयतां प्राप्तो **रौद्रो** रसः।

यथा—

> 'चञ्चद्भुजभ्रमितचण्डगदाभिघात-
> संचूर्णितोरुयुगलस्य सुयोधनस्य।
> स्त्यानावनद्धघनशोणितशोणपाणि
> रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥'

---

परस्परसमीपं गतम् अन्यदपहसितमतिशयेन चेत्युपसर्गभेदादर्थभेदः ॥ **चञ्चद्भुजेति।** चञ्चद्भ्यां वेगावर्तमानाभ्यां भुजाभ्यां भ्रमिता ये[१] पञ्च दारुणा गदा तया योऽभितः सर्वतः ऊर्ध्वाधस्तेन सम्यग्घूर्णितं पुनरनुत्थानोपहतं कृतमूरुयुगलं युगपदेवोरुद्वयं यस्य तं सुयोधनमनादत्यैव स्त्यानेनावश्यानतया न तु कालान्तरशुष्कतयावनद्धं हस्ताभ्यामविचलद्रूपमत्यन्तमाभ्यन्तरतया घनं न तु रसमात्रस्वभाव यच्छोणितं रुधिरं तेन शोणौ लोहितौ पाणी यस्य। अत एव स भीम· कातरत्रासदायी। **तवेति।** यस्यास्तत्तदपमानज्ञातं[४] कृतं देव्यनुचितमपि, तस्यास्तव कचानुत्तंसयिष्यति उत्तंसवतः करिष्यतीति वेणीत्वमपहरन् करविच्युतशोणित(शोणित)शकललोहितकुसुमापीडेनेव योजयिष्यतीत्युत्प्रेक्षा। तव देवीत्यनेन कुलकलत्रखलीकारस्मरणकारिणा क्रोधस्यैवोद्दीपनविभावत्वं कृतमिति नात्र शृङ्गारशङ्का कर्तव्या। सुयोधनस्य चानादरणं द्वितीयगदाघातदानाद्यनुद्यमः, स च सचूर्णितोरुत्वादेव। स्त्यानग्रहणेन द्रौपदीमन्युप्रक्षालने त्वरा

---

१. 'निष्पेष' स्यात्.

---

१. 'येय चण्डा' स्यात्. २. 'भिघातः' स्यात्. ३. 'म्यक्चू' स्यात्. ४. 'जातं' स्यात्. ५ 'स्त्याना' स्यात्.

वीरमाह—

**नयादिविभावः स्थैर्याद्यनुभावो धृत्यादिव्यभिचार्युत्साहो धर्मदानयुद्धभेदो वीरः ।**

प्रतिनायकवर्तिनयविनयासंमोहाध्यवसायबलशक्तिप्रतापप्रभावविक्रमाधिक्षेपादिविभावः स्थैर्यधैर्यशौर्यगाम्भीर्यत्यागवैशारद्याद्यनुभावो धृतिस्मृत्यौग्र्यगर्वामर्षमत्यावेगहर्षादिव्यभिचारी उत्साहः स्थायिभावश्चर्वणीयतां गतो धर्मदानयुद्धभेदात्रेधा **वीरः** ।

यथा—

'अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥'

तत्र धर्मवीरो नागानन्दे जीमूतवाहनस्य । दानवीरः परशुरामबलिप्रभृतीनाम् । युद्धवीरो वीरचरिते रामस्य ॥

इह चापत्पङ्कनिमग्नतां स्वल्पसंतोषं मिथ्याज्ञानं चापस्य यस्तत्त्वनिश्चयरूपोऽसंमोहाध्यवसायः स एव प्रधानतयोत्साहहेतुः । रौद्रे तु ममताप्राधान्यादशास्त्रितानुचितयुद्धाद्यपीति मोहविस्मयप्राधान्यमिति विवेकः ।

भयानकमाह—

**विकृतस्वरश्रवणादिविभावं करकम्पाद्यनुभावं शङ्कादिव्यभिचारि भयं भयानकः ।**

---

सूचिता ॥ **नयेति** । संध्यादिगुणानां सम्यक्प्रयोगो **नयः** । इन्द्रियजयो **विनयः** । असंमोहेनाध्यवसायो वस्तुतत्त्वनिश्चय इति मन्त्रदर्शिता । हस्त्यश्वरथपादातं **बलम्** । अवस्कन्दयुद्धादौ सामर्थ्यं **शक्तिः** । शत्रुविषयसंतापकारिणी प्रसिद्धिः **प्रतापः** । अभिजनधनमन्त्रिसंपत् **प्रभावः** । सामाद्युपायानामेकद्वित्रिचतुरादिभेदैर्यथाविषयं नियोजनं **वैशारद्यम्** ॥ **धर्मेति** । धर्मादित्रितयमनुभा-

पिशाचादिविकृतस्वरश्रवणतदवलोकनस्वजनबन्धवधादिदर्शनश्रवण-शून्यगृहारण्यगमनादिविभावं करकम्पचलदृष्टिनिरीक्षणहृदयपादस्पन्द-शुष्कौष्ठकण्ठत्वमुखवैवर्ण्यस्वरभेदाद्यनुभावं शङ्कापस्मारमरणत्रासचापलावेगदैन्यमोहादिव्यभिचारी स्त्रीनीचप्रकृतीनां स्वाभाविकमुत्तमानां कृतकं भयं स्थायिभावश्चर्वणीयत्वमागतं **भयानको** रसः।

यथा—

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्।
शष्पैरर्धावलीढैः श्रमविततमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥'

ननु च राजादिः किमिति गुर्वादिभ्यः कृतकं भयं दर्शयति, दर्शयित्वा किमिति मृदून् करकम्पादीन्दर्शयति, किमिति च भय एव कृतकत्वमुक्तं सर्वस्य हि कृतकत्वं संभवति, यथा वेश्या धनार्थिनी कृतकां रतिमादर्शयति॥ उच्यते—भये हि प्रदर्शिते गुरुर्विनीतं तं जानाति मृदुचेष्टिततया चाधमप्रकृतिमेनं न गणयति। कृतकरत्यादेश्चोपदिष्टान्न काचित्पुरुषार्थसिद्धिः। यत्र तु राजानः परानुग्रहाय क्रोधविस्मयादि दर्शयन्ति, तत्र व्यभिचारित्वैव, न तेषां स्थायितेति॥

---

वात्मकं प्रतिनायकगतं तु विभावरूपमिति तद्भेदाद्वीरस्य त्रैविध्यमित्यर्थः। यदाह भरतः—'दानवीरं धर्मवीरं युद्धवीरं तथैव च। रस वीरमपि प्राह ब्रह्मा त्रिविधमेव हि॥' इति॥ **स्त्रीनीचप्रकृतीनामिति**। नोत्तममध्यमप्रकृतीनाम्॥ **कृतकमिति**। उत्तमा हि अन्तर्भयाभावेऽपि गुरुभ्यो राज्ञश्च भयं दर्शयन्ति। एवं हि सुतरामुत्तमत्वं भवति। प्रभुभक्तत्वं चामात्यानां यथा स्वेच्छाकारीत्यत

बीभत्समाह—

**अहृद्यदर्शनादिविभावाङ्गसंकोचाद्यनुभावापस्मारादिव्यभिचारिणी जुगुप्सा बीभत्सः ।**

अहृद्यानामुद्वान्तव्रणपूतिकृमिकीटादीनां दर्शनश्रवणादि विभावा अङ्गसंकोचहृल्लासनासामुखविकूणनाच्छादननिष्ठीवनाद्यनुभावापस्मारौग्र्यमोहगदादिव्यभिचारिणी जुगुप्सा स्थायिभावरूपा चर्वणीयतां गता **बीभत्सः ।**

यथा—

'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आत्तस्नायवन्त्रनेत्रात्प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥'

अद्भुतमाह—

**दिव्यदर्शनादिविभावो नयनविस्ताराद्यनुभावो हर्षादिव्यभिचारी विस्मयोऽद्भुतः ।**

दिव्यदर्शनेप्सितमनोरथावाप्त्युपवनदेवकुलादिगमनसभाविमानमायेन्द्रजालातिशायिशल्यकर्मादिविभावो नयनविस्तारानिमिषप्रेक्षणरोमाञ्चा-

---

एवास्सीति ॥ **दिव्येति** । दिव्या गन्धर्वादयस्तेषां दर्शनम् । शक्यप्राप्तिरर्थ **ईप्सितः,** [1]शक्यप्राप्तिस्तु **मनोरथः,** तयोः प्राप्तिः, उपवने देवकुलादौ च गमनमद्भुतविभावो येन तत्रत्यं सरः सन्निवेशादि न क्वचिद्दृष्टम् । **सभा** गृहविशेषः । **विमानानि** दिव्यरथाः । **माया** रूपपरिवर्तनादिका । **इन्द्रजलं**[2] मन्त्रदिव्य[3]हस्त्ययुक्त्यादिनासंभवद्वस्तुप्रदर्शनम् । साध्वितिवदनं **साधुवदः**[4] ।

१. 'अशक्य' स्यात्. २. 'जालं' स्यात्. ३. 'हस्त' स्यात्. ४. 'वादः' स्यात्.

श्रुस्वेदसाधुवाददानहाहाकारचेलाङ्गुलिभ्रमणाद्यनुभावो हर्षावेगजडतादिव्यभिचारी चित्तविस्तारात्मा विस्मयः स्थायिभावश्चर्वणीयतां गतोऽद्भुतो रसः ।

यथा—

'कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया,
सत्यं कृष्ण, क एवमाह, मुसली, मिथ्याम्ब पश्याननम् ।
व्यादेहीति विकाशिते शिशुमुखे माता समग्रं जग-
द्दृष्ट्वा यस्य जगाम विस्मयपदं पायात्स वः केशवः ॥'

शान्तमाह—

**वैराग्यादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृत्यादिव्यभिचारी शमः शान्तः ।**

वैराग्यसंसारभीरुतातत्त्वज्ञानवीतरागपरिशीलनपरमेश्वरानुग्रहादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृतिस्मृतिनिर्वेदमत्यादिव्यभिचारी तृष्णाक्षयरूपः शमः स्थायिभावश्चर्वणां प्राप्तः **शान्तो** रसः ।

**दानं** धनादेः । हाहाशब्दस्य करणं **हाहाकारः** । चेलस्य अङ्गुलेश्च भ्रमणमिति ॥ **यमेति** । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ **कृष्णाक्षय इति** । कृष्णानां विषयाभिलाषाणां क्षये यत्रात्मस्वभावः स शमः । अयमर्थः—कालुष्योपरागदायिभिर्भयरत्यादिभिरनुपरक्तं यदात्मस्वरूपं तदेव विरलोऽस्ति तरलान्तरालनिर्भासमानसिततरसूत्रवदाभातस्वरूपं रत्यादिषूपरञ्जकेषु तथाभावेनापि सकृद्विभातोऽयमात्मेति न्यायेन

१. 'दानाहोकार' वाग्भटकाव्यानुशासने. २. 'विकासिते' स्यात्. ३. 'कृष्णाक्षय' इति टीकाया व्याख्यातम्

१. 'क्षयो यत्रात्मस्वभावे' स्यात्. २. 'असितरत्ना' स्यात्.

यथा—

'गङ्गातीरे हिमवति शिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्येषु ते निर्विशङ्काः
कण्डूयन्ते जरठहरिणाः शृङ्गकण्डूं विनेतुम् ॥'

---

भासमानं परोन्मुखतात्मकसकलदुःखजालहीनं परमानन्दलाभसंविदेकघनं तथा-विधहृदयसंवादवतो हृदयं विधत्ते ॥ एतेन निर्वेदस्यामङ्गलप्रायत्वेऽपि व्यभिचारिषु यन्मुनिना प्रथममुपादानं कृतं तत्स्थायिताभिधानार्थमिति यदुक्तम्, तत्प्रतिक्षिप्तम् । तथाहि—कोऽयं निर्वेदो नाम, दारिद्र्यादिप्रभवस्तत्त्वज्ञानप्रभवो वा । तत्राद्यस्य शोकप्रवाहप्रसररूपचित्तवृत्तिविशेषस्य व्यभिचारित्वं वक्ष्यते । अथ तत्त्वज्ञानजो निर्वेदः स्थायी, तर्हि तत्त्वज्ञानमेवात्र विभावत्वेनोक्तं स्यात् । वैराग्यबीजादि(?)षु कथं विभावः । तदुपायत्वादिति चेत्कारणकारणेऽयं विभावता व्यवहारः, स चातिप्रसङ्गावहः । किं च निर्वेदो नाम सर्वत्रानुपादेयताप्रत्ययो वैराग्यलक्षणः । स च तत्त्वज्ञानस्य प्रत्युतोपायः । विरक्तो हि तथा प्रयतते यथास्य तत्त्वज्ञानमुत्पद्यते । तत्त्वज्ञानाद्धि मोक्षो, न तु[1] तत्त्वं ज्ञात्वा निर्विद्यते[2] ॥ ननु तत्त्वज्ञानिनः सर्वत्र दृढतरं वैराग्यं दृष्टम् । भवत्वेवं तादृशं तु वैराग्यं ज्ञानस्यैव पराकाष्ठेति न निर्वेदः स्थायीति ॥ यत्तु व्यभिचारिव्याख्यानावसरे 'वृथा दुग्धोऽनड्वान्' इत्यादौ चिरकालविभ्रमविप्रलब्धस्योपादेयत्वनिवृत्तये सम्यग्ज्ञानं वक्ष्यते, तन्निर्वेदस्य खेदरूपस्य विभावत्वेनेति, तस्मात् शम एव स्थायी । न च शमशान्तयोः पर्यायत्वमाशङ्कनीयम् । हासहास्ययोरिव सिद्धसाध्यतया लौकिकालौकिकतया साधारणासाधारणतया च वैलक्षण्यात् । यथा च कामादिषु पुरुषार्थेषु समुचिताश्चित्तवृत्तयो रत्यादिशब्दवाच्याः कविनटव्यापारेणास्वादयोग्यताप्रापणद्वारेण तथाविधहृदयसंवादवतः सामाजिकान् प्रति रसत्वं शृङ्गारादितया नीयते, तथा मोक्षाभिधानपरपुरुषार्थोपचितापि शमरूपा चित्तवृत्ती रसतां नीयत इति । तथा हि तत्त्वज्ञानस्वभावस्य शमस्य स्थायिनः समस्तोऽयं

---

१. 'तु' स्यात्. २. 'निर्विद्यते' स्यात्.

लौकिकालौकिकश्चित्तवृत्तिकलापो व्यभिचारितामभ्येति, तदनुभावा एव च यमनियमाद्युपकृता अनुभावाः, विभावा अपि परमेश्वरानुग्रहप्रभृतयः, प्रश्रयोन्मुखाश्च रत्यादयोऽत्रास्वाद्यन्ते। केवलं यथा विप्रलम्भे औत्सुक्यं संभोगेऽपि वा प्रेमासमाप्तोत्सवमिति। यथा च रौद्रे औग्र्यम्, यथा च करुणवीरभयानकाद्भुतेषु निर्वेदधृतित्रासहर्षा व्यभिचारिणोऽपि प्राधान्येन विभासन्ते, तथा शान्ते जुगुप्सायाः सर्वथैव रागप्रतिपक्षत्वात् स्वात्मनि च कृतकृतस्य परार्थघटनायामेवोद्यम इत्युत्साहोऽस्य परोपकारविषयेच्छाप्रयत्नरूपो दयापरपर्यायोऽभ्यधिकोऽन्तरङ्गः। अत एव केचिद्दयावीरत्वेन व्यपदिश्यन्तेऽन्ये धर्मवीरत्वेन॥ ननूत्साहोऽहंकारप्राणः शान्तस्त्वहंकारशैथिल्यात्मकः। ननु किमतः (?) व्यभिचारित्वं हि विरुद्धस्यापि नानुचितं रताविव निर्वेदादेः। 'शय्यां शाड्वलम्—' इत्यादौ हि परोपकारकरणे उत्साहस्यैव प्रकर्षो लक्ष्यते, नैनूत्साहशून्या काचिदप्यवस्था। इच्छाप्रयत्नव्यतिरेकेण पाषाणतापत्तेः। यत एव च परिदृष्टपरम्परत्वेन स्वात्मोद्देशेन कर्तव्यान्तरं नावशिष्यते। अत एव शान्तहृदयानां परोपकाराय शरीरसर्वस्वादिदानं न शास्त्रविरोधि। 'आत्मानं (यो) गोपायेत्' इत्यादिना ह्यकृतकृत्यविषयं शरीररक्षणमुपदिश्यते, संन्यासिना तद्रक्षादितात्पर्याभावात्। तथा हि—'धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः। तान्निघ्नता किं न हतं रक्षता किं न रक्षितम्॥' इत्यतिप्रसिद्धचतुर्वर्गसाधकत्वमेव देहरक्षायां निदानं दर्शितम्। कृतप्रेत्यस्य 'जलधौ श्वभ्रे वा पतेत्' इति संन्यासित्वेन श्रवणात्। तद्यथा कथंचित्त्याज्यं शरीरम्, यदि परमार्थमुत्पद्यते तत्किमिव न संपादितं भवति। जीमूतवाहनादीनां नयतत्त्वमिति चेत्, किं तेन। तत्त्वज्ञानित्वं तावदस्त्येव, अन्यथा परमार्थे त्यागस्यासंभाव्यत्वात्। युद्धेऽपि हि न वीरस्य देहत्यागायोद्यमः पराजयोद्देशेनैव प्रवृत्तेः। भृगुपतनादावपि शुभतमदेहान्तरसंपिपादयिषैवाभिविजृम्भते। तत्स्वार्थानुद्देशेन परार्थसंपत्त्यै यद्यच्चेष्टितं देहत्यागपर्यन्तमुपदेशदानादि तत्तदलब्धात्मतत्त्वज्ञानानामसंभाव्यमेवेति। तेऽपि (?) तत्त्वज्ञानिनां सर्वेष्वाश्रमेषु मुक्तिरिति। स्मार्तश्रुतौ यथोक्तम्—'देवार्चनरतस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धं कृत्वा ददद्द्रव्यं गृहस्थोऽपि हि मुच्यते॥' इति केवलं परार्थाभिसंधिजाद्धर्मात्परोपकारफलत्वेनैवाभिसंहतात्पुनरपि देहस्य

१. 'कृत्यस्य' स्यात्. २. 'न्तेऽन्ये' स्यात्. ३. 'ननु' स्यात्. ४. 'कृत्यस्य' स्यात्. ५. 'परविजयो' स्यात्.

न चास्य विषयजुगुप्सारूपत्वात् बीभत्सेऽन्तर्भावो युक्तः। जुगुप्सा ह्यस्य व्यभिचारिणी भवति, न तु स्थायितामेति। पर्यन्तनिर्वाहे तस्या मूलत एवोच्छेदात्। न च धर्मवीरे, तस्याभिमानमयत्वेन व्यवस्थानात् अस्य चाहंकारप्रशमैकरूपत्वात्। तथापि तयोरेकत्वपरिकल्पनेन वीररौद्रयोरपि तथा प्रसङ्गः। धर्मवीरादीनां चित्तवृत्तिविशेषाणां सर्वाकारमहंकाररहितत्वे शान्तरसप्रभेदत्वमितरथा तु वीररसप्रभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद्विरोधः। तदेवं परस्परविविक्ता नवापि रसाः॥

---

तदुचितस्यैव प्रादुर्भावो बोधिसत्त्वानां तत्त्वज्ञानिनामपि। दृष्टश्चाङ्गेष्वपि विश्रान्तिलाभः स्वभावौचित्यात्। यथा रामस्य वीराङ्गे पितुराज्ञां परिपालयतः। एवं शृङ्गाराद्यङ्गेष्वपि मन्तव्यम्। अत एव शान्तस्य स्थायित्वेऽप्यप्राधान्यम्। जीमूतवाहने त्रिवर्गसंपत्तौ क्षयरोगकृतिप्रधानयोः फलत्वात्। तदत्र सिद्धं दयालक्षणोऽभ्युत्साहोऽत्र प्रधानम्। अन्ये तु व्यभिचारिणो यथायोगं भवन्तीति॥ एवं यत्कैश्चिज्जीमूतवाहनस्य धीरोदात्तत्वं प्रतिष्ठितं तत्प्रत्युक्तमेव। न च तदीया पर्यन्तावस्था व्यावर्णनीया येन सर्वथेष्टोपरमादनुभावाभावेनाप्रतीयमानता स्यात्। शृङ्गारादेरपि फलभूमावव्यावर्णनीयतैव। पूर्वभूमौ तु 'प्रशान्तवाहितासस्कारात्तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः' इति सूत्रद्वयनीत्या चित्राकारा यमनियमादिचेष्टा वा राज्यधुरोद्वहनादिलक्षणा वा शान्तस्यापि जनकादेर्दृष्टैवेत्यनुभावासद्भावादिमादिमध्यसंभाव्यमानभूयोव्यभिचारिसद्भावात्प्रतीयते एव (नै प्रतीयते)॥ ननु प्रतीयते सर्वस्य तु श्लाघ्यास्पदं न भवति। तर्हि वीतरागाणां शृङ्गारोऽश्लाघ्य इति। सोऽपि रसत्वाच्च्यवताम्। अयमर्थः—यदि नाम सर्वजनानुभवगोचरता तस्य नास्ति नैतावता, सा च लोकसामान्यमहानुभावचित्तवृत्तिविशेषवत्प्रतिक्षेप्तुं शक्या॥ ननु धर्मप्रधानोऽसौ वीर एव संभाव्यते इत्याशङ्क्याह—**अभिमानमयत्वेनेति**। उत्साहो ह्यहमेवंविध इत्येवंप्राण इत्यर्थः॥ **अस्य चेति**। शान्तस्य॥ **तथापीति**। इह मेयत्वनिरीहत्वाभ्यामत्यन्तं विरुद्धयोरपीत्यर्थः। वीररौद्रयोस्तु धर्मार्थकामार्जनोपयोगित्वेन तुल्यरूपत्वादत्यन्त-

१. लेखकप्रक्षिप्तं भवेत्.

एषां क्रमेण स्थायिभावान् संगृह्णाति—

**रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयशमाः स्थायिनो भावाः।**

भावयन्ति चित्तवृत्तय एवालौकिका वाचिकाद्यभिनयप्रक्रियारूढतया स्वात्मानं लौकिकदशायामनास्वाद्यमप्यास्वाद्यं कुर्वन्ति। यद्वा भावयन्ति व्याप्नुवन्ति सामाजिकानां मन इति भावाः स्थायिनो व्यभिचारिणश्च। तत्र स्थायित्वमेतावतामेव। जात एव हि जन्तुरियतीभिः संविद्भिः परीतो भवति। तथा हि दुःखद्वेषी सुखास्वादनलालसः सर्वो रिरंसया व्याप्तः स्वात्मन्युत्कर्षमानितया परमुपहसति। उत्कर्षापायशङ्कया शोचति। अपायं प्रति क्रुध्यति। अपायहेतुपरिहारे समुत्सहते। विनिपाताद्बिभेति। किंचिदयुक्ततयाभिमन्यमानो जुगुप्सते। ततश्च परकर्तव्यवैचित्र्यदर्शनाद्विस्मयते। किंचिज्जिहासुस्तत्र वैराग्यात्प्रशमं भजते। न ह्येतच्चित्तवृत्तिवासनाशून्यः प्राणी भवति। केवलं कस्यचित्काचिदधिका भवति चित्तवृत्तिः, काचिदूना। कस्यचिदुचितविषयनियन्त्रिता, कस्यचिदन्यथा। तत्काचिदेव पुरुषार्थोपयोगिनीत्युपदेश्या। तद्विभागकृतश्चोत्तमप्रकृत्यादिव्यवहारः॥

ये पुनरमी धृत्यादयश्चित्तवृत्तिविशेषास्ते समुचितविभावाभावाज्जन्ममध्ये न भवन्त्येवेति व्यभिचारिणः। तथा हि रसायनमुपयुक्तचेतोग्लान्यालस्यश्रमप्रभृतयो न भवन्त्येव। यस्यापि वा भवन्ति विभावबलात्तस्यापि हेतुप्रक्षये क्षीयमाणाः संस्कारशेषता नावश्यमुपबध्नन्ति। रत्यादयस्तु संपादितस्वकर्तव्यतया प्रलीनकल्पा अपि संस्कारशेषतां नातिवर्तन्ते।

---

विरोधोऽपि नास्ति॥ **संगृह्णातीति**। संकलयति, न तु लक्षयति। शृङ्गा-

१. 'संकल' स्यात्.

वस्त्वन्तरविषयस्य रत्यादेरखण्डनात् । यदाह पतिञ्जलिः[1]—'न हि चैत्र एकस्यां स्त्रियां विरक्त इत्यन्यासु विरक्तः' इत्यादि । तस्मात्स्थायिरूपचित्तवृत्तिसूत्रस्यूता एवामी स्वात्मानमुदयास्तमयवैचित्र्यशतसहस्रधर्माणं प्रतिलभमानाः स्थायिनं विचित्रयन्तः प्रतिभासन्ते इति व्यभिचारिण उच्यन्ते । तथा हि ग्लानोऽयमित्युक्ते कुत इति हेतुप्रश्नेनास्थायितास्य सूच्यते । न तु राम उत्साहशक्तिमानित्यत्र हेतुप्रश्नमाहुः । अत एव विभावास्तत्रोद्बोधकाः सन्तः स्वरूपोपरञ्जकत्वं विदधाना रत्युत्साहादेरुचितानुचितत्वमात्रमावहन्ति, न तु तदभावे ते सर्वथैव निरुपाख्याः। वासनात्मना सर्वजन्तूनां तन्मयत्वेनोक्तत्वात् । व्यभिचारिणां तु स्वविभावाभावे नामापि नास्ति ॥

तत्र परस्परास्थाबन्धात्मिका **रतिः** । चेतसो विकासो **हासः** । वैधुर्यं **शोकः** । तैक्ष्ण्यप्रबोधः **क्रोधः** । संरम्भः स्थेयानु**त्साहः** । वैक्लव्यं **भयम्** । संकोचो **जुगुप्सा** । विस्तारो **विस्मयः** । तृष्णाक्षयः **शमः** ॥

रसलक्षण एव स्थायिस्वरूपे निरूपिते पुनर्निर्देशः क्वचिदेषां व्यभिचारित्वख्यापनार्थः । तथा हि विभावभूयिष्ठत्वे एषां स्थायित्वम्, अल्पविभावत्वे तु व्यभिचारित्वम् । यथा रावणादावन्योन्यानुरागाभावाद्रतिर्व्यभिचारिणी । तथा गुरौ प्रियतमे परिजने च यथायोगं वीरशृङ्गारादौ रोषो व्यभिचार्येव । एवं भावान्तरेषु वाच्यम् । शमस्य तु यद्यपि क्वचिदप्राधान्यम्, तथापि न व्यभिचारित्वम्, प्रकृतित्वेन स्थायितमत्वात् ।

---

रादिरसलक्षण एव स्थायिस्वरूपस्य निरूपितत्वादिति भावः ॥ **प्रकृतित्वेन स्थायितमत्वादिति** । रत्यादयो हि तत्तत्कारणान्तरोदयप्रलयोत्पद्यमान-

१. 'पतञ्जलिः' स्यात्.

व्यभिचारिणो ब्रूते—

**धृतिस्मृतिमतिव्रीडाजाड्यविषादमदव्याधिनिद्रासुप्तौत्सुक्यावहित्थशङ्काचापलालस्यहर्षगर्वौग्र्यप्रबोधग्लानिदैन्यश्रमोन्मादमोहचिन्तामर्षत्रासापस्मारनिर्वेदावेगवितर्कासूयामृतयः स्थित्युदयप्रशमसंधिशबलत्वधर्माणस्त्रयस्त्रिंशद्व्यभिचारिणः।**

तत्र **धृतिः** संतोषः। **स्मृतिः** स्मरणम्। **मतिरर्थनिश्चयः**। **व्रीडा** चित्तसंकोचः। **जाड्यमर्थाप्रतिपत्तिः**। **विषादो** मनःपीडा। **मद** आनन्दसंमोहसंभेदः। **व्याधिर्मनस्तापः**। **निद्रा** मनःसंमीलनम्। **सुप्तं** निद्राया गाढावस्था। **औत्सुक्यं** कालाक्षमत्वम्। **अवहित्थमाकारगुप्तिः**। **शङ्कानिष्टोत्प्रेक्षा**। **चापलं** चेतोऽनवस्थानम्। **आलस्यं** पुरुषार्थेष्वनादरः। **हर्षश्चेतःप्रसादः**। **गर्वः** परावज्ञा। **औग्र्यं** चण्डत्वम्। **प्रबोधो** विनिद्रत्वम्। **ग्लानिर्बलापचयः**। **दैन्यमनौजस्यम्**। **श्रमः** खेदः। **उन्मादश्चित्तविप्लवः**। **मोहो** मूढत्वम्। **चिन्ता** ध्यानम्। **अमर्षः** प्रतिचिकीर्षा। **त्रासश्चित्तचमत्कारः**। **अपस्मार** आवेशः। **निर्वेदः** स्वावमाननम्। **आवेगः** संभ्रमः। **वितर्कः** संभावना। **असूया** अक्षमा। **मृतिर्म्रियमाणता**। एते च स्थित्युदयप्रशमसंधिशबलत्वधर्माणः।

स्थितिर्यथा—

'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।

---

निरुध्यमानवृत्तयः किंचित्कालमापेक्षिकतया स्थायिरूपात्मवित्तिसंश्रयाश्च स्थायिन इत्युच्यन्ते। तत्त्वज्ञानं तु सकलभावान्तरवित्तिस्थानीयं सर्वस्थायिभ्यः स्थायितमं सर्वा रत्यादिकाः स्थायिचित्तवृत्तीर्व्यभिचारिभावयन्निसर्गत एव सिद्ध-

तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥'

अत्र विप्रलम्भरससद्भावेऽपि इयति वितर्कस्थितिचमत्कारकृत आस्वादातिशयः ।

उदयो यथा—

'याते गोत्रविपर्यये श्रुतिपथं शय्यामनुप्राप्तया
निध्यातं परिवर्तनं पुनरपि प्रारब्धमङ्गीकृतम् ।
भूयस्तत्प्रकृतं कृतं च शिथिलक्षिप्तैकदोर्लेखया
तन्वङ्ग्या न तु पारितः स्तनभरो नेतुं प्रियस्योरसः ॥'

अत्र मानस्योदयः ।

प्रशमो यथा—

'दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते वक्रव-
न्न्यग्भूतं बहिरासितं पुलकवत्स्पर्शे समातन्वति ।
नीवीबन्धवदागतं शिथिलतां संभाषमाणे ततो
मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥'

अत्र मानस्य प्रशमः ।

संधिर्यथा—

'उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः ॥'

अत्रावेगहर्षयोः संधिः ।

शबलत्वं यथा—

'काकार्यं शशिलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥'

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलत्वम् ।

विविधमाभिमुख्येन स्थायिधर्मोपजीवनेन स्वधर्मार्पणेन च चरन्तीति व्यभिचारिणः । भावा इत्यनुवर्तते । संख्यावचनं नियमार्थम् । तेनान्येषामत्रैवान्तर्भावः । तद्यथा—दम्भस्यावहित्थे, उद्वेगस्य निर्वेदे, क्षुत्तृष्णादेर्ग्लानौ । एवमन्यदप्यूह्यम् ॥ अन्ये त्वाहुः—एतावत्स्वेव सहचारिषु अवस्थाविशेषेषु प्रयोगप्रदर्शितेषु स्थायी चर्वणायोग्यो भवति ॥

एषां विभावानुभावानाह—

**ज्ञानादेर्धृतिरव्यग्रभोगकृत् ।**

ज्ञानबाहुश्रुत्यगुरुभक्तितपःसेवाक्रीडार्थलाभादिविभावा **धृतिः** संतोषः । सा च लब्धानामुपभोगेन नष्टानामननुशोचनेन योऽव्यग्रो भोगस्तं करोति । तेनानुभावेन धृतिं वर्णयेदित्यर्थः ।

यथा—

'वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषे निर्विशेषा विशेषाः ।

---

स्थायिभावमिति ॥ **बिभावानुभावानिति** । न तु व्यभिचारिणः । एवं हि तदास्वादे स्वं रसान्तरमपि स्यात् । यत्रापि च व्यभिचारिणि व्यभिचार्यन्तरं

---

१. 'शशलक्ष्मणः' इत्यन्यत्र. २. 'निर्विशेषाः' स्यात्.

स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥'

**सदृशदर्शनादेः स्मृतिर्भ्रूक्षेपादिकृत् ।**

सदृशदर्शनस्पर्शनश्रवणाभ्यासप्रणिधानादिभ्यः सुखदुःखहेतूनां स्मरणं **स्मृतिः** । तां भ्रूक्षेपशिरःकम्पमुखोन्नमनशून्यावलोकनाङ्गुलीभङ्गादिभिर्वर्णयेत् ।

यथा—

'मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावण-
मा ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥'

**शास्त्रचिन्तादेर्मतिः शिष्योपदेशादिकृत् ।**

शास्त्रचिन्तनोहापोहादिभ्योऽर्थनिश्चयो **मतिः** । तां शिष्योपदेशार्थविकल्पनसंशयच्छेदादिभिर्वर्णयेत् ।

यथा—

'असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥'

**अकार्यकरणज्ञानादेर्व्रीडा वैवर्ण्यादिकृत् ।**

अकार्यकरणज्ञानगुरुव्यतिक्रमप्रतिज्ञाभङ्गादेश्चेतःसंकोचो **व्रीडा** । तां वैवर्ण्याधोमुखविचिन्तनभूविलेखनवस्त्राङ्गुलीयकर्णस्पर्शननखनिस्तोदनादिभिर्वर्णयेत् ।

---

संभाव्यते । तद्यथा पुरुषस्य उन्मादे वितर्कचिन्तादि । तत्रापि रतिस्थायिभावस्यैव व्यभिचार्यन्तरयोगः स केवलममात्यस्थानीयो नोन्मादेन कृतोपराग इति ।

यथा—

'दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कानि न चकार लज्जया॥'

**इष्टानिष्टदर्शनादेर्जाड्यं तूर्ष्णींभावादिकृत्।**

इष्टानिष्टदर्शनश्रवणव्याध्यादिभ्योऽर्थाप्रतिपत्तिर्जाड्यम्। तत्तूर्ष्णींभावानिमिषनयननिरीक्षणादिभिर्वर्णयेत्।

यथा—

'एवमालि निगृहीतसाध्वसं शंकरो रहसि सेव्यतामिति।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये॥'

**कार्यभङ्गाद्विषादः सहायान्वेषणमुखशोषादिकृत्।**

उपायाभावनाशाभ्यां प्रारब्धस्य कार्यस्य भङ्गान्मनःपीडा **विषादः**। तं सहायान्वेषणोपायचिन्तनोत्साहविघातवैमनस्यादिना उत्तममध्यमानाम्, मुखशोषजिह्वासृक्कलेहननिद्राश्वसितध्यानादिभिरधमानां वर्णयेत्।

यथा—

'व्यर्थं यत्र कपीन्द्रसख्यमपि मे क्लेशः कपीनां वृथा
प्रज्ञा जाम्बवतो न यत्र न गतिः पुत्रस्य वायोरपि।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया कापि मे॥'

**मद्योपयोगान्मदः स्वापहास्यास्मरणादिकृत्।**

मद्यपानादानन्दसमोहयोः संगमो **मदः**। तं स्वापस्मितगानकिंचिदाकुलबाष्पस्खलद्गतिमञ्जुभाषणरोमोद्गमादिभिरुत्तमानाम्, हास्यगीतस्रस्ताकुलभुजक्षेपव्याविद्धकुटिलगत्यादिभिर्मध्यमानाम्, अस्मरणघूर्णनस्खलद्गमनरुदितच्छर्दितसन्नकण्ठनिष्ठीवनादिभिरधमानां वर्णयेत्। तथा च—

'उत्तमाधममध्येषु वर्ण्यते प्रथमो मदः ।
द्वितीयो मध्यनीचेषु नीचेष्वेव तृतीयकः ॥'

यथा—

'सावशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु ।
गन्तुमुद्यतमकारणतः स द्योतयन्ति मदविभ्रममासाम् ॥'

**विरहादेर्मनस्तापो व्याधिर्मुखशोषादिकृत् ।**

विरहाभिलाषादिभ्यो मनस्तापो व्याधिहेतुत्वाद्**व्याधिः**। तं मुखशोष-स्रस्ताङ्गतागात्रविक्षेपादिभिर्वर्णयेत् ।

यथा—

'मनोरोगस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव बलीयानित इतो
न मां तातस्त्रातुं प्रभवति न चाम्बा न भवती ॥'

**क्लमादेर्निद्रा जृम्भादिकृत् ।**

क्लमश्रममदालस्यचिन्तात्याहारस्वभावादिभ्यो मनःसंमीलनं निद्रा । तां जृम्भावदनगौरवशिरोलालननेत्रघूर्णनगात्रमर्दोच्छ्वसितनिःश्वसितसन्नगात्रताक्षिनिमीलनादिभिर्वर्णयेत् ।

यथा—

'निद्रानिमीलितदृशो मदमन्थराणि
नाप्यर्थवन्ति न च यानि निरर्थकानि ।
अद्यापि मे मृगदृशो मधुराणि तस्या-
स्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥'

---

१. 'गौरवशरीरालालन' इति भरतः.

**निद्रोद्भवं सुप्तमुत्स्वमायितादिकृत्।**

निद्रोद्भवमित्यनेन निद्राया एव गाढावस्था **सुप्तमित्याह**। तदुत्स्वमायितोच्छ्वसितनिःश्वसितसंमोहनादिना वर्णयेत्।

यथा—

'एते लक्ष्मण जानकीविरहितं मां खेदयन्त्यम्बुदा
मर्माणीव विघट्टयन्त्यलममी क्रूराः कदम्बानिलाः।
इत्थं व्याहृतपूर्वजन्मचरितो यो राधया वीक्षितः
सेर्ष्यं शङ्कितया स वः सुखयतु स्वप्नायमानो हरिः॥'

**इष्टानुस्मरणादेरौत्सुक्यं त्वरादिकृत्।**

इष्टानुस्मरणदर्शनादेर्विलम्बासहत्वम**औत्सुक्यम्**। तत्त्वरानिःश्वसितोच्छ्वसितकार्श्यमनःशून्यतादिगवलोकनरणरणकादिभिर्वर्णयेत्।

यथा—

'आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः।
बद्धुं न संभावित एव तावत्करेण रुद्धोऽपिहि[1] केशपाशः॥'

**लज्जादेरवहित्थमन्यथाकथनादिकृत्।**

लज्जाजैह्म्यभयगौरवादिभ्यो भ्रूविकारमुखरागादीनामाच्छादनकारिणी चित्तवृत्तिर**वहित्थम**वहित्था वा। न बहिःस्थं चित्तं येनेति। पृषोदरादित्वात्। तदन्यथाकथनावलोकितकथाभङ्गकृतकधैर्यादिभिर्वर्णयेत्।

यथा—

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती॥'

**चौर्यादेः स्वपरयोः शङ्का पार्श्वविलोकनादिकृत्।**

१. 'च' सम्मुपलभ्यमानरघुवंशे.

चौर्यपारदार्यादेर्विरुद्धाचरणादनिष्टोत्प्रेक्षा **शङ्का**। सा च कदाचित्स्वस्मिन्, यदा समापराधयोरात्मपरयोः परो राजादिना दण्ड्यते। कदाचित्परस्मिन्, यदा विकाराकुलतया कृतदोषत्वेन परः संभाव्यते। सा च पार्श्वविलोकनमुखौष्ठकण्ठशोषणगात्रप्रकम्पनस्वरास्यवर्णभेदावगुण्ठनादिभिर्वर्ण्यते।

स्वस्मिन्यथा—

'दूराद्दवीयो धरणीधराभं यस्ताडकेयं तृणवद्व्यधूनोत्।
हन्ता सुबाहोरपि ताडकारिः स राजपुत्रो हृदि बाधते माम्॥'

परस्मिन्यथा—समुद्रदत्तस्य नन्दयन्त्यामन्यानुरागशङ्का, दुर्योधनस्य वा भानुमत्याम्।

**रागादेश्चापलं वाक्पारुष्यादिकृत्।**

रागद्वेषमात्सर्यामर्षेर्ष्यादिभ्यश्चेतोनवस्थानं **चापलम्**। अविमृश्य कार्यकरणमिति यावत्। तच्च वाक्पारुष्यनिर्भर्त्सनप्रहारवधबन्धादिभिर्वर्णयेत्।

यथा—

'कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम्।
रजोभिरन्तः परिवेषबन्धि लीलारविन्दं भ्रमयांचकार॥'

**श्रमादेरालस्यं निद्रादिकृत्।**

श्रमसौहित्यरोगगर्भस्वभावादिभ्यः पुरुषार्थेष्वनादर **आलस्यम्**। तच्च निद्रातन्द्रासर्वकर्मविद्वेषशयनासनादिना वर्णयेत्।

यथा—

'चलति कथंचित्पृष्टा यच्छति वाचं कदाचिदालीनाम्।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः॥'

**प्रियागमादेर्हर्षो रोमाञ्चादिकृत्।**

प्रियागमनबन्धुहर्षदेवगुरुराजभर्तृप्रसादभोजनाच्छादनधनलाभोपभोगमनोरथावाप्त्यादिभ्यश्चेतःप्रसादो **हर्षः** । तं च रोमाञ्चाश्रुस्वेदनयनवदनप्रसादप्रियभाषणादिभिर्वर्णयेत् ।

यथा—

'आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यतां
गेहिन्या परितोषबाष्पसलिलामासज्य दृष्टिं मुखे ।
दत्त्वा पीलुशमीकरीरकवलान्स्वेनाञ्चलेनादरा-
दुन्मृष्टं करभस्य केसरसटाभाराग्रलग्नं रजः ॥'

**विद्यादेर्गर्वोऽसूयादिकृत् ।**

विद्याबलकुलैश्वर्यवयोरूपधनादिभ्यः परावज्ञा **गर्वः** । तमसूयामर्षपारुष्योपहासगुरुलङ्घनाधिक्षेपनेत्रगात्रविकृत्यनुत्तरदानशून्यावलोकनाभाषणैर्वर्णयेत् ।

यथा—

'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥'

**चौर्यादेरौग्र्यं वधादिकृत् ।**

चौर्यद्रोहासत्प्रलापादिभ्यश्चण्डत्वम**ौग्र्यम्** । तद्वधबन्धताडननिर्भर्त्सनादिभिर्वर्णयेत् ।

यथा—

'उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसंतानरोषा-
दुद्दामस्यैकविंशत्यवधि विशसतः सर्वतो राजवंशान् ।
पित्र्यं तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमान-
क्रोधाग्नेः कुर्वतो मे न खलु न विदितः सर्वभूतैः स्वभावः ॥'

**शब्दादेः प्रबोधो जृम्भादिकृत् ।**

शब्दस्पर्शस्वप्नान्तः स्वप्नजल्पननिद्राच्छेदाहारपरिणामादिभ्यो विनिद्रत्वं **प्रबोधः** । स च जृम्भणाक्षिमर्दनभुजक्षेपाङ्गुलिस्फोटनशय्यात्यागग्रीवाङ्गवलनादिभिर्वर्ण्यते ।

यथा—

'प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवाजृम्भणैः साङ्गभङ्गैः ।
नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदेऽभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥'

**व्याध्यादेर्ग्लानिर्वैवर्ण्यादिकृत् ।**

व्याधिमनस्तापनिधुवनोपवासक्षुत्पिपासाध्वलङ्घननिद्राच्छेदातिपानतपोजराकलाभ्यासादिभ्यो बलापचयो **ग्लानिः** । तां वैवर्ण्यक्षामनेत्रकपोलोक्तिश्लथाङ्गत्वप्रवेपनदीनसंचारानुत्साहादिभिर्वर्णयेत् ।

यथा—

'किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डुः क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥'

**दौर्गत्यादेर्दैन्यममृजादिकृत् ।**

दौर्गत्यमनस्तापादिभ्योऽनौजस्यं **दैन्यम्** । तन्मृजात्यागगुर्वङ्गताशिरःप्रवणादिभिर्वर्णयेत् ।

यथा—

'अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां प्रेमप्रवृत्तिं च ताम् ।

१. 'स्नेहप्र'.

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या च या
भार्[1]याधीनमतः परं न खलु तत्[2]स्त्रीबन्धुभिर्याच्यते ॥'

**व्यायामादेः श्रमोऽङ्गभङ्गादिकृत्।**

व्यायामाध्वगत्यादिभ्यो मनःशरीरखेदः **श्रमः**। सोऽङ्ग[3]भङ्गमर्दन-मन्दक्रमास्यविकूणनादिभिर्वर्णयेत्।

यथा—

'अलसलुलितमुग्धान्यध्वसंतापखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि।
मृदुमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता॥'

**इष्टवियोगादेरुन्मादोऽनिमित्तस्मितादिकृत्।**

इष्टवियोगधननाशाभिघातवातसंनिपातग्रहादिभ्यश्चित्तविप्लव **उन्मादः**। तमनिमित्तस्मितरुदितोत्कुष्टगीतनृत्यप्रधावितोपवेशनोत्थानासंबद्धप्रलापभस्मपांशूद्धूलननिर्माल्यचीवरघटचक्रशरावाभरणादिभिर्वर्णयेत्।

यथा—

'हंस प्रयच्छ मे कान्तां गति[5]स्तस्यास्त्वया हृता।
संभावितैकदेशेन देयं यदभियुज्यते॥'

**प्रहारादेर्मोहो भ्रमणादिकृत्।**

प्रहारमत्सरभयदैवोपघातपूर्ववैरस्मरणत्रासनादिभ्यश्चित्तस्य मूढत्वं **मोहः**। मोहस्य प्रागवस्थापि मोहशब्देनोच्यते। तं भ्रमणदेहघूर्णनपतन-सर्वेन्द्रियप्रमोहवैचित्र्यादिभिर्वर्णयेत्।

१. 'त्वया'. २. 'भाग्यायत्त'. ३. 'तद्वाच्यं वधूबन्धुभिः'. ४. 'ऽङ्गमर्द' भरतः. ५. 'गतिरस्याः'.

यथा—

'तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥'

सुखजन्मापि **मोहो** भवति ।

यथा—

'कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना-
द्वासः श्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि सांप्रतमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं तु किं कथमिति स्वल्पापि मे न स्मृतिः ॥'

**दारिद्र्यादेश्चिन्ता संतापादिकृत् ।**

दारिद्र्येष्टद्रव्यापहारैश्वर्यभ्रंशादिभ्यो ध्यानं **चिन्ता** । सा च स्मृतेरन्या ग्रसनादद नवत् । खेलनाद्गमनवच्च । तां संतापशून्यचित्तत्वकार्श्यश्वासाधोमुखचिन्तनादिभिर्वर्णयेत् । सा च वितर्कात्ततो वा वितर्क इति वितर्कात्पृथग्भवति चिन्ता ।

यथा—

'पश्यामि तामित इतः पुरतश्च पश्चा-
दन्तर्बहिः परित एव विवर्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासज्य तिर्यगपवर्तितदृष्टि वक्त्रम् ॥'

**आक्षेपादेरमर्षः स्वेदादिकृत् ।**

विद्यैश्वर्यबलाधिककृतेभ्य आक्षेपावमानादिभ्यः प्रतिचिकीर्षारूपोऽ**मर्षः** । स च स्वेदध्यानोपायान्वेषणशिरःकम्पाधोमुखविचिन्तनादिभिर्वर्ण्यते ।

यथा—

'लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु चित्तनिचयेषु च नः प्रहृत्य।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः॥'

**निर्घातादेस्त्रासोऽङ्गसंक्षेपादिकृत्।**

निर्घातगर्जितभूपर्वतकम्पशिलोल्काशनिविद्युत्पातरक्षःस्थूलप्रभूतकुष्ठादिभ्यश्चेतश्चमत्कृतिरूपस्त्रासो भयात्पूर्वापरविचारवतो भिन्न एव। सोऽङ्गसंक्षेपस्तम्भरोमोद्गमगद्गदप्रलयोत्कम्पनिःस्यन्दवीक्षितैर्वर्ण्यः।

यथा—

'परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम्॥'

**ग्रहादेरपस्मारः कम्पादिकृत्।**

ग्रहभूतदेवयक्षपिशाचब्रह्मराक्षसशून्यारण्यश्मशानसेवनोच्छिष्टगमनधातुवैषम्यादेरावेशरूपोऽपस्मारः। तं कम्पितस्फुरितस्विन्नधावितश्वसितभूमिपतनारावमुखफेनादिभिर्वर्णयेत्। अयं च प्राय आभासेष्वेव शोभते।

यथा—

'आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम्।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के॥'

**रोगादेर्निर्वेदो रुदितादिकृत्।**

रोगाधिक्षेपताडनदारिद्र्येष्टवियोगावमानतत्त्वज्ञानादिभ्यः स्वावमाननारूपो **निर्वेदः**। स रुदितश्वसितानुपादेयतादिभिर्वर्ण्यः।

---

**तत्त्वज्ञानादिभ्य इति।** चिरकालविभ्रमविप्रलब्धस्य उपादेयत्वनिवृत्तये यस्य-

यथा—

'किं करोमि क्व गच्छामि कमुपैमि दुरात्मना।
दुर्भरेणोदरेणाहं प्राणैरपि विडम्बितः॥'

**उत्पातादिभ्य आवेगो विस्मयादिकृत्।**

उत्पातवातवर्षाग्निगजप्रियाप्रियश्रवणव्यसनादिभ्यः संभ्रम **आवेगः**। तं विस्मयावगुण्ठनच्छन्नश्रयणधूमान्ध्यत्वरितापसर्पणपुलकविलापसंनहनादिभिर्यथासंख्यं वर्णयेत्।

तत्रोत्पातावेगो यथा—

'किं किं सिंहस्ततः किं नरसदृशवपुर्देव चित्रं गृहीतो
नैवेदृक्कोऽपि जीवो द्रुतमुपनिपतत्पश्य संप्राप्त एव।
शस्त्रं शस्त्रं न शस्त्री त्वरितमहह हा कर्कशत्वं नखाना-
मित्थं दैत्याधिनाथो निजनखकुलिशैर्येन भिन्नः स पायात्॥'

---

म्यगज्ञानं तन्निर्वेदं जनयति, न त्वात्मस्वभावः, तस्य शान्तस्थायित्वेनोक्तत्वात्। यथा—'वृथा दुग्धोऽनड्वान्स्तनभरनता गौरिति चिरं परिष्वक्तः षण्ढो युवतिरिति लावण्यरहितः। कृता वैडूर्याशा विकचकिरणे काचशकले मयामूढेन त्वां कृपण-मगुणज्ञं प्रणमता॥' इति। अयं च निर्वेदः स्वयं पुरुषार्थसिद्धये वोत्साहरत्यादिवदत्यन्तानुरञ्जनाय वा हासविस्मयादिवन्न प्रभवतीत्यन्यमुखप्रेक्षितत्वाद्व्यभिचार्येवेति॥ **उत्पातवातेति**। आदिशब्दः प्रत्येकमभिसंबध्यते। ततश्चोत्पातादेर्वातादेर्वर्षादेरग्न्यादेर्गजादेः प्रियश्रवणादेरप्रियश्रवणादेर्व्यसनादेश्च विभावादित्यर्थः। एवं विस्मयादिना अवगुणादिच्छन्नश्रवणादिना धूमान्ध्यादिना त्वरितापसर्पणादिना पुलकादिना विलापादिना संहननादिना चानुभावेनेति प्रतिपत्तव्यम्॥ तत्र उत्पा-

१ 'कुञ्जरोद्भ्रमण' इति भरतसंवादात् 'गजो(द्भ्रमण)' इति भवेत्. टीकायां तु 'गजादेः' इत्थं व्याख्यातं तस्माद् 'गज' इत्येव स्यात्. २. 'छन्नाश्रयण' इति भरते पाठात् 'छन्नाश्रयण' इति भवेत्.

---

१ 'अवगुण्ठनादिना छन्नाश्रयणा' स्यात्.

एवं वातावेगादिषूदाहार्यम् ।

संदेहादेर्वितर्कः शिरःकम्पादिकृत् ।

संदेहविमर्शविप्रतिपत्त्यादिभ्यः संभावनीयप्रत्ययो वितर्कः । स शिरःकम्पभ्रूक्षेपसंप्रधारणकार्यकलापमुहुर्ग्रहणमोक्षणादिभिर्वर्ण्यः ।

यथा—

'अनङ्गः पञ्चभिः पौष्पैर्विश्वं व्यजयतेषुभिः ।
इत्यसंभाव्यमथ वा विचित्रा वस्तुशक्तयः ॥'

---

तावेगः 'किं किं सिंहः' इत्यादिना निदर्शितः ॥ वातावेगो यथा—'वाताहृतं वसनमाकुलमुत्तरीयम्—' इत्यादि । वर्षावेगो यथा—'देवे वर्षत्यशनपचनव्यापृता वह्निहेतोर्गेहाद्गेहं फलकनिचितैः सेतुभिः पङ्कभीताः । नीव्रप्रान्तानविरलजलान्पाणिभिस्ताडयित्वा सूर्पच्छायास्थगितशिरसो योषितः संचरन्ति ॥' अग्न्यावेगो यथा—'क्षिप्तो हस्तावलग्नः—' इत्यादि । गजावेगो यथा—'स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन । रामापरित्राणविहस्तबोधं सेनानिवेशं तुमुलं चकार ॥' प्रियदर्शनादावेगो यथा—'एह्येहि वत्स रघुनन्दन पूर्णचन्द्र चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम् । आरोप्य वा हृदि दिशामि शमुद्वहामि वन्देऽथ वा चरणपुष्करकद्वयं ते ॥' अप्रियदर्शनश्रवणावेगो यथा उन्मत्तराघवे—'चित्रमायः—(ससंभ्रमम् ।) भगवन् कुलपते रामभद्र, परित्रायतां परित्रायताम् । (इत्याकुलतां नाटयति ।)' इत्यादि । पुनः 'चित्रमायः—मृगरूपं परित्यज्य विधाय विकटं वपुः । नीयते रक्षसा तेन लक्ष्मणो युधि संक्षयम् ॥ रामः—वत्सस्याभयवारिधेः प्रतिभयं मन्ये कथं राक्षसात्त्रस्तश्चैष मुनिर्विरौति मनस्यास्त्येव मे संभ्रमः । मा हासीर्जनकात्मजामिति मुहुः स्नेहाद्गुरुर्याचते न स्थातुं न च गन्तुमाकुलमतेर्मूढस्य मे निश्चयः ॥' व्यसनं राजविड्वरादि, तद्धेतुरावेगो यथा—'आगच्छागच्छ सज्जं कुरु, वरतुरगं संनिधेहि द्रुतं मे, खड्गः क्वासौ, कृपाणीमुपनय, धनुषा किं किमङ्ग प्रविष्टे । संरम्भोन्निद्रितानां क्षितिभृति गहनेऽन्योन्यमेव प्रतीच्छन्नादः स्वप्नाभिदृष्टे त्वयि चकितदशां विद्विषामाविरासीत् ॥' संदेहेति । संदेहः किंस्विदित्युभयावलम्बी प्रत्ययः संशयरूपः । विमर्शो

१ 'नीव्रप्रा' स्यात्. २. 'ड्विड्वरादि' स्यात्.

**परोत्कर्षादेरसूयावज्ञादिकृत् ।**

परस्य सौभाग्यैश्वर्यविद्यादिभिरुत्कर्षादादिशब्दादपराधमुहुर्वैषादिभ्यश्चाक्षमारूपासूया । तामवज्ञाभ्रुकुटीकोधसेर्ष्योत्त्यालोकितदोषोपवर्णनादिभिर्वर्णयेत् ।

यथा—

> 'वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
> सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
> यानि त्रीणि कुतोमुखान्यपि पदान्यासन्खरायोधने
> यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥'

**व्याध्यभिघाताभ्यां मृतिर्हिकाकार्श्यादिकृत् ।**

व्याधिर्ज्वरादिः प्रतीतः, सर्पविषगजादिसंभवोऽभिघातस्ताभ्यां मृतेः प्रागवस्था **मृतिः** । साक्षान्मृतावनुभवाभावात् । तत्र व्याधिजां मृतिं हिक्काश्वासाङ्गभङ्गाक्षिनिमीलनाद्यैः, अभिघातजां तु कार्श्यवेपथुदाहहिक्काफेनाङ्गभङ्गजडतामरणादिभिर्वर्णयेत् ।

---

विशेषप्रतीत्याकाङ्क्षात्मिका इच्छा । प्रमाणेन पक्षाभावप्रतीतिमात्रं विप्रतिपत्तिरित्याहुः । एभ्योऽन्तरं भवितव्यताप्रत्ययस्वभावः एकतरपक्षशैथिल्यदायी पक्षान्तरतुल्यकक्षभवोच्चावयतु(?)न्ममतामन्यस्य दर्शयंस्तर्कः । स च संशयात्पृथगेव । संदेहेन तत्त्वबुद्ध्याशादिरूपस्य विमर्शादेः स्वीकारेऽपि कविशिक्षार्थं भङ्ग्या निरूपणम् । अन्ये तु—धर्मिणि संदेहो धर्मे तु विमर्शो भ्रान्तिज्ञानं विप्रतिपत्तिरित्याहुः । **प्रागवस्थेति** । म्रियमाणावस्थैव अनेन व्याधिना मे न निवर्तितव्यमित्येवंविधचित्तवृत्तिरूपा ॥ **कार्श्येति** । अष्टौ हि विषवेगाः । यदाह भरत.—'कार्श्यं तु प्रथमे वेगे द्वितीये वेपनं[1] तथा । दाहं तृतीये हिक्कां च चतुर्थे संप्रयोजयेत् ॥ फेनं च पञ्चमे कुर्यात्स्यात्षष्ठे स्कन्धभञ्जनम् । जडतां

१. 'वेपथुस्तथा' भरतपुस्तके.

यथा—

'स गतः क्षितिमुष्णशोणितार्द्रो खुरदंष्ट्राग्रनिपातदारिताश्मा ।
असुभिः क्षणमीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिर्निरासे ॥'

शृङ्गारे तु मरणाध्यवसायो मरणादूर्ध्वं झटिति पुनर्योगो वा निबध्यते । अन्यत्र तु स्वेच्छा ।

यथा—

'संप्राप्तेऽवधिवासरे क्षणममुं तद्वर्त्मवातायनं
वारंवारमुपेत्य निःक्रियतया निश्चित्य किंचिच्चिरम् ।
संप्रत्येव निवेद्य केलिकुररीः सास्रं सखीभ्यः शिशो-
र्माधव्या सहकारकेण करुणः पाणिग्रहो निर्मितः ॥'

तथा—

'तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा संगतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥'

अथ सात्त्विकानाह—

**स्तम्भस्वेदरोमाञ्चस्वरभेद(स्वर)कम्पवैवर्ण्याश्रुप्रलया अष्टौ सात्त्विकाः ।**

सीदत्यस्मिन्मन इति व्युत्पत्तेः सत्त्वगुणोत्कर्षात्साधुत्वाच्च प्राणात्मकं वस्तु सत्त्वम्, तत्र भवाः सात्त्विकाः । भावा इति वर्तते ॥ ते च

सप्तमे कुर्यादष्टमे मरणं तथा ॥' आदिग्रहणात्सहसा भूमिपतनविकम्पनस्फुरणाद्यो ज्ञेयाः ॥ **प्राणभूमीति** । अयं भावः । रत्यादयश्चित्तवृत्तिविशेषाः

१. लेखकप्रमादपतितो भवेत्.

प्राणभूमिप्रसृतरत्यादिसंवेदनवृत्तयो बाह्यजडरूपभौतिकनेत्रजलादिविलक्षणा विभावेन रत्यादिगतेनैवातिचर्वणागोचरेणाहृता अनुभावैश्च गम्यमाना भावा भवन्ति। तथा हि। पृथ्वीभागप्रधाने प्राणे संक्रान्तचित्तवृत्तिगणः स्तम्भोविष्टत्वं चेतनत्वम्। जलभागप्रधाने तु बाष्पः। तैज-

---

पूर्वसंविद्रूपाः समुल्लसन्ति। तत आभ्यन्तरं प्राणान्तस्वरूपाध्यासेन कलुषयन्ति। न चैतदसंवेद्यम्। तथा हि क्रोधावेशे अन्तरः ज्वलन्नेव पूर्वमुन्मिषति ततः स्वेदः। अनेनैवाशयेन भट्टबाणेनोक्तम्—'पूर्वं तपो गलति पश्चात्स्वेदसलिलम्' इति। तथा तदवस्थां प्राप्तोऽवहित्थादिना भावो बहिर्विकारपर्यन्ताप्राप्तेः परिरक्ष्यमाणो दृष्टः। यथा—'पिअमुहससङ्कदंसणचलिअं रइसाअरं पिआहिअअम्। गुरुसंकमरुम्भियसेअपमुहपसरं पि हु ण ठाइ॥' प्रियमुखदर्शनेन रतिविषये सादरं मत्प्रियाहृदयं चलितं गुरुविषये मा संक्रमीदिति। निषिद्धस्वेदप्रभृति बाह्यप्रसरमपि न विश्राम्यति। आन्तरस्वेदादि सात्त्विकक्षोभमयमेवेत्यर्थः। निदर्शनं चात्र प्रतीयमानम्। तथा हि। प्रियं मुखं यस्य तादृशस्य शशाङ्कस्य दर्शने आहृदयमपि चलितो रयी वेगवत्सागरो गुरुणा सेतुना रुद्धाः सेकप्रारम्भकाः प्रसरा यस्य तादृशोऽपि खल्वित्याश्चर्यं न तिष्ठति न निस्तरङ्गीभवति। सागरशब्द उभयलिङ्गः। प्राकृते वा लिङ्गविपर्यासः। तदत्र रतिर्मनोरुपत्वाच्च्युता बाह्याभौतिकविकारपर्यवसायिनी च न जातेति प्राणभूमावेव विश्रान्ता वर्णितः॥ **रत्यादिगतेनैवेति**। नेतु विभावान्तरेण, तेषां बाह्यविषयविशेषाभिमुख्यनिरपेक्षत्वादित्यर्थः॥ ग्लान्यालस्यश्रममूर्च्छादीनां तु यद्यप्यालम्बनविषयशून्यता, तथापि बाह्यहेतुका अतो व्यभिचारिषु गणिताः। अबाह्यहेतुकास्तु स्तम्भादय इति सात्त्विकाः॥ **स्तम्भो विष्टम्भचेतनत्वमिति**। मनसा हर्षादिवशेनानिन्द्रियप्रदेशचारिणां विकल्पपर्यन्तागमनरहिताविकल्पकवृत्तिमात्रनिष्ठानामि-

---

१. 'स्तम्भो विष्टम्भचेतनत्वम्' इति टीकायाम्.

---

१. 'प्रियमुखशशाङ्कदर्शनचलितं रतिसादर प्रियाहृदयम्। गुरुसंक्रमरुद्धसेकप्रारम्भप्रसरमपि खलु न तिष्ठति॥' इति, '–रयिसागरोऽप्याहृदयम्। गुरुसंक्रमरुद्धसेकप्रारम्भकप्रसरोऽपि खलु न तिष्ठति॥' इति च च्छाया. २. 'न तु' स्यात्.

सस्तु प्राणनैकट्यादुभयथा तीव्रातीव्रत्वेन प्राणानुग्रह इति द्विधा स्वेदो वैवर्ण्यं च । तद्धेतुत्वात् च तथा व्यवहारः । आकाशानुग्रहे गतचेतनत्वं प्रलयः । वायुस्वातन्त्र्ये तु तस्य मन्दमध्योत्कृष्टावेशात्त्रेधा रोमाञ्चवेपथुस्वरभेदभावेन स्थितिरिति भरतविदः ॥ बाह्यास्तु स्तम्भादयः शरीरधर्मा अनुभावाः । ते चान्तरालिकान् सात्त्विकान् भावान् गमयन्तः परमार्थतो रतिनिर्वेदादिगमका[1] इति स्थितम् ॥ एवं च नव स्थायिनः, त्रयस्त्रिंशद्व्यभिचारिणः, अष्टौ सात्त्विकाः । इति पञ्चाशद्भावाः ॥

रसभावानभिधाय तदाभासानाह—

**नैरिन्द्रियेषु[2] तिर्यगादिषु चारोपाद्रसभावाभासौ ।**

निरिन्द्रिययोः संभोगारोपणात्संभोगाभासो यथा—

'पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥'

---

न्द्रियाणामनधिष्ठानादित्यर्थः । यथा—'तेताणहयच्छायणिव्वललोअणसिहंपउच्छवायम् । आलिरकपइवाणवणिपयपयइचडुलत्तण पिवि अलिअम् ॥' एवं बाष्पहेतुत्वाद्बाष्पो यथा—'उत्पक्ष्मणोर्नयनयोरुपरुद्धवाष्पं वृद्धिं कुरु स्थिरतया विहितानुबन्धम् । अस्मिन्नलक्षितनतोन्नतभूमिभागे मार्गे पदानि खलु ते विषमीभवन्ति ॥' **तीव्रातीव्रत्वेनेति** । तीव्रत्वेन प्राणानुग्रहस्वेदो यथा—'आश्लेषे प्रथमं क्रमादथ जिते हृद्येऽधरस्यार्पणे केलिद्यूतविधौ पणं प्रियतमे कान्ता पुनः पृच्छति । सा तूर्हासनिरुद्धसंभृतरसोद्भेदस्फुरद्गण्डया तूर्ष्णीं शारविशारणाय निहितः स्वेदाम्बुगर्भः करः ॥' अतीव्रत्वेन तु वैवर्ण्यं यथा—'संचारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा । नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥' प्रलयन्ति प्रकर्षेण प्राणनिलीनेष्विन्द्रियेषु लयः प्रलयः । यथा—'तीव्राभिषङ्गप्रभवेण–' इति ॥ **तस्येति** । प्राणस्य ॥ **मन्देति** ।

1. 'रतिनिर्वेदा' स्यात्. 2. 'निरिन्द्रि' स्यात्.

१. अस्य संस्कृतं न स्मर्यते.

विप्रलम्भारोपणाद्विप्रलम्भाभासो यथा—

'वेणीभूतप्रतनुसलिला ताम्यती तस्य सिन्धुः
पाण्डुच्छायातटरुहतरुभ्रंशिभिः शीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥'

भावाभासो यथा—

'गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।
अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥'

तिरश्चोः संभोगाभासो यथा—

'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥'

यथा च—

'ददौ सरःपङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥'

विप्रलम्भाभासो यथा—

'आपृष्टासि व्यथयति मनो दुर्बला वासरश्री-
रेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकि ।

---

प्राणस्य मन्दावेशाद्रोमाञ्चो यथा—(वेन्दावन्दाभिमुखम् ।) 'तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोस्तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया। पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके संधयः ॥' मिथ्यावेशाद्वेपथुर्यथा—'मा गर्वमुद्वह कपोलतले चकास्ति

१. 'तामतीतस्य(?)' स्यात्.

---

१. लेखकप्रमादलिखित भवेत्. २. 'मध्यावेशा' स्यात्.

नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा
दैवासक्तस्त्वदिह भवतीमस्वतन्त्रस्त्यजामि ॥'

यथा वा—

'नान्तर्वर्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात्सरसः करोति कवलानावर्जितैः शैवलैः ।
दानास्वादनिषण्णमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥'

भावाभासो यथा—

'त्वत्कटाक्षावलीलीलां विलोक्य सहसा प्रिये ।
वनं प्रयात्यसौ व्रीडाजडदृष्टिर्मृगीजनः ॥'

आदिशब्दान्निशाचन्द्रमसोर्नायकत्वाध्यारोपात्संभोगाभासो यथा—

'अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥'

चन्द्रे भावाभासो यथा—

'त्वदीयमुखमालोक्य लज्जमानो निशाकरः ।
मन्ये घनघटान्तर्धिं समाश्रयति सत्वरः ॥'

रसाभासस्य भावाभासस्य च समासोक्त्यर्थान्तरन्यासोत्प्रेक्षारूपकोपमाश्लेषादयो जीवितम् ॥

---

कान्त स्वहस्तलिखिता मम मञ्जरीति । अस्यापि किं सखि न भाजनमीदृशानां वैरी न चेद्भवति वेपथुरन्तरायः ॥' उत्कृष्टावेशात्स्वरभेदो यथा—'याते द्वारमतीम्–' इति ॥ एते च सात्त्विकाः प्रतिरसं संभवन्तीति राजानुगतविवाहप्रवृत्तभृत्यन्यायेनापि व्यभिचारिवच्च स्वातन्त्र्यगन्धमपि भजन्त इति सुलभोदाहरणत्वाच्च बहून्युदाहरणानि न प्रदर्शितानि ॥ **रसाभास इति ।**

अनौचित्याच्च।

अन्योन्यानुरागाद्यभावेनानौचित्याद्रसभावाभासौ।

रसाभासो यथा—

'दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं
चेतः कालकलामपि प्रसहते नावस्थितिं तां विना।
एतैराकुलितस्य विक्षतरतेरङ्गैरनङ्गातुरैः
संपद्येत कथं तदाप्तिसुखमित्येतन्न वेद्मि स्फुटम्॥'

अत्र सीताया रावणं प्रति रत्यभावाद्रसाभासः।

यथा वा—

'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान्रणमखमुखे यं मृगयसे।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बला-
त्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम्॥'

अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति।

भावाभासो यथा—

'निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
कान्तिः प्रावरणं तनोर्मधुमुचो यस्याश्च वाचः किल।

---

[1]परस्परस्थानबन्धात्मिकाया हि रतेः शृङ्गारत्वमुक्तम्। अत्र तु कामनाभिलाषमात्ररूपा रतिर्व्यभिचारिभावो न स्थायी। तस्य तु स्थायिकल्पत्वेनाभाति। अतश्च स्थाय्याभासत्वं रतेः। यतो रावणस्य सीताद्विष्टमप्युपेक्षिका हृदयं नैव स्पृशति। तत्स्पर्शे ह्यभिमानोऽस्य [2]लीयेतैवामयीयं रसक्तेति तु निश्चयोऽप्यनुपयोगी कामजमोहसारत्वात् शुक्तौ रूप्याभासवत्। तस्माद्विभावाद्याभासाद्रत्या-

---

१. 'परस्परास्थानबन्धा' इति स्यात्.　　२. 'लीयेतैव। मयीयं न सक्तेति' स्यात्.

विंशत्या रचिताञ्जलिः करतलैस्त्वां याचते रावण-
स्त्वां द्रष्टुं जनकात्मजां हृदय हे नेत्राणि मित्रीकुरु ॥'

अत्रौत्सुक्यम् ॥

काव्यस्य लक्षणमुक्त्वा भेदानाह—

**व्यङ्गयस्य प्राधान्ये काव्यमुत्तमम् ।**

वाच्यादर्थाद्व्यङ्ग्यस्य वस्त्वलंकाररसादिरूपस्य प्राधान्ये काव्यमुत्तमम् । यथा—

'वल्मीकः किमुतोद्धृतो गिरिरियत्कस्य स्पृशेदाशयं
त्रैलोक्यं तपसा जितं यदि मदो दोष्णां किमेतावता ।
सर्वं साध्यथ वा रुणत्सि विरहक्षामस्य रामस्य चे-
त्त्वद्दन्ताङ्कितवालिकक्षरुधिरक्लिन्नाग्रपुङ्खं शरम् ॥'

अत्र दन्ताङ्कितपदेन तदवजयस्तत्कक्षपरिग्रहस्तथैव चतुरर्णवभ्रमणं पुनः कृपामात्रेण त्यागस्तत्राप्रतीकारः पुनरप्यभिमानदर्प इत्यादि व्यज्यते ॥

**असत्संदिग्धतुल्यप्राधान्ये मध्यमं त्रेधा ।**

असति संदिग्धे तुल्ये च प्राधान्ये व्यङ्ग्यस्य मध्यमं काव्यम् ।

---

भासे प्रतीते चर्वणाभाससारः शृङ्गाराभास इति ॥ एवं हास्याभासो यथा—'लोकोत्तराणि चरितानि न लोक एष संमन्यते यम किमङ्ग वदाम नाम । यत्त्वत्र हासमुखरे त्वममुष्य तेन पार्श्वोपपीडमिह को न विजाहसीति ॥' अत्र यदभिनन्दनीयेऽपि वस्तुनि लोकस्य हासमुखरत्वं स हास्याभासः । किंशब्दस्य वाच्यस्य तु हास्यत्वमेव । एवं रसान्तरेषूदाहार्यमिति ॥ **दन्ताङ्कितपदेनेति** । वस्तुस्वभावेन । **अभिमानदर्प इत्यादीति** । वस्त्वित्यर्थः । एवमलंकारे रसादौ च प्राधान्येन व्यङ्ग्ये काव्यस्योत्तमत्वं विज्ञेयम् । तद्यथा—'लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्स्मेरेऽधुना तव मुखे तरलायताक्षि । क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः ॥' अत्र रूपकालंकारो व्यङ्ग्यः ।

तत्रासत्प्राधान्यं कचिद्वाच्यादनुत्कर्षेण ।

यथा—

'वाणीरकुडङ्गुड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए वहूए सीदन्ति अङ्गाइं ॥'

अत्र 'दत्तसंकेतः कश्चिल्लतागहनं प्रविष्टः' इति वाक्यात् 'सीदन्त्यङ्गानि' इति वाच्यमेव सातिशयम् ।

---

तथा हि । लावण्यं संस्थानमुभिमा, कान्तिः प्रभा, ताभ्यां परिपूरितानि संविभक्तानि हृद्यानि संपादितानि दिङ्मुखानि येन । कोपकषायकालुष्यादनन्तरं प्रसादौन्मुख्येन स्मेरे ईषद्विहसनशीले तरलायते प्रसादान्दोलनविकासमुन्दरे अक्षिणी यस्यास्तस्या आमन्त्रणम् । अथ वा अधुना कोपादनन्तरं प्रसादोदये न एति, वृत्ते तु क्षणान्तरे क्षोभमगमत् । कोपकषायपाटलस्मेरं च तव मुखं संध्यारुणपूर्णशशधरमण्डलमेवेति भाव्यम् । क्षोभेण चलितचित्तवृत्तितया सहृदयस्य न चैति तत्सुव्यक्तमन्वर्थतयायं जलराशिर्जाड्यसंचयः । जलादयः शब्दा भावार्थप्रधाना इत्युक्तं प्राक् । अत्र क्षोभो मदनविकारात्मा सहृदयस्य त्वन्मुखावलोकने भवतीति इयताभिधाया विश्रान्तत्वाद्रूपकं व्यङ्ग्यमेव । तदाश्रयेण च काव्यस्य चारुत्वं व्यवतिष्ठत इति तस्यैव प्राधान्यम् ॥ रसप्राधान्ये यथा—'कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरभ्रान्ता नितम्बस्थले मध्येऽस्यास्त्रिवलीतरङ्गविषमे निःस्पन्दतामागता । मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥' अत्र हि नायिकाकरानुवर्तमानस्वात्मप्रतिकृतिपवित्रितचित्रफलकालोकनाद्वत्सराजस्य परस्परास्थावन्यरूपो रतिस्थायिभावो विभावानुभावसंयोजनावशेन चर्वणा इति (?) आरुह्य इति प्राधान्येनात्र रसो व्यङ्ग्यः । एवं भावतदाभासादीनामुत्तमकाव्यप्रभेदतया उदाहरणानि ज्ञेयानीति ॥ **सातिशयमिति** । तथा हि ।

---

१. 'वाच्याद्' इति भवेत्.

२. 'वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥' इति च्छाया.

३. 'व्यङ्ग्यात्' इति काव्यप्रकाशोक्तमेव वर प्रतीयते.

---

१. 'मभिमा' स्यात्. २. 'कृच्छ्राद्रूरु' इत्युपलभ्यते. ३. 'प्रस्यन्दिनी' स्यात्. ४. 'स्थाबन्धरूपो' स्यात्.

तत्र संस्कृतभाषानिबद्धसर्गबन्धं हयग्रीववधादि । प्राकृतभाषानिबद्धाश्वासकबन्धं सेतुबन्धादि । अपभ्रंशभाषानिबद्धसंधिबन्धमब्धिमथनादि । ग्राम्यापभ्रंशभाषानिबद्धावस्कन्धकबन्धं भीमकाव्यादि । प्रायोग्रहणात्संस्कृतभाषयाप्याश्वासकबन्धो हरिप्रबन्धादौ न दुष्यति । प्रायोग्रहणाद्देवरावणविजय हरिविजय-सेतुबन्धेष्वादितः समाप्तिपर्यन्तमेकमेव च्छन्दो भवतीति । गलितकानि तु तत्र कैरपि विदग्धमानिभिः क्षिप्तानीति तद्विदो भाषन्ते ।

**नायकख्यातस्ववृत्ताभाव्यर्थशंसिवक्त्रादिः सोच्छ्वासा संस्कृता गद्ययुक्ताख्यायिका ।**

---

**यानुवर्तनमिति** । अनेन महाकवीनां समयमुपलक्षयति । तत्र 'गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् । निराकरणमित्येष मार्ग. प्रकृतिसुन्दरः ॥ वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि । तज्जयान्नायकोत्कर्षकथनं च धिनाति नः ॥' इति । (अर्थोः का) एतानि नगरवर्णनादीनि समुच्चयप्रयोज्यानि, उत विकल्पप्रयोज्यानि । समुच्चयप्रयोज्यानीति चेत्, किरातार्जुनीयादौ किरातार्णवार्कोदयविवाहकुमाराभ्युदयादीनामभणनम् । अथो विकल्पेन यथेष्टकल्पनाया मलत्वप्रसङ्गः । तत्र अङ्गकलज(?)स्योभत्रापीष्टत्वात् । यदा कथाशरीरस्य परिपूर्णाङ्गसंभवस्तदा समुच्चयेन । यदान्यथा तदा विकल्पेनेति । तत्रापि केषाञ्चिदङ्गानां विकल्पोऽपरेषां नियमेन प्रयोगः । यानि पुरुषार्थस्यार्थकामादेरासन्नोपकारीणि तानि नियमतः प्रयुज्यन्ते । यथा मन्त्रदूतप्रयाणादिन्नायकाभ्युदयादयः । यथा च शैलर्तूद्यानगमनजलक्रीडाचन्द्रोदयमधुपानरतोत्सवादयः । तानि च यदि कथाशरीरे न स्युस्तदा कथान्तरानुषञ्जनेनापि कर्तव्यानीति प्रचक्षते ॥ **वृत्तमिति** । वृत्तशब्दः सदाचार एव वर्तते । तदेव मनुराह—'न विद्यया केवलया तपसा वापि पात्रता । यस्य वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥' इति । तदाह—**वक्त्रेति** । वक्त्रशब्देन वक्त्रप्रकरणं लक्ष्यते । तद्यथा—'अनुष्टुभि नाश्वाश्चातुर्यो वक्त्रम्' इत्यादि । नजजा अपरवक्त्रम् । द्वितीयषष्ठो जोन्तो वा पूर्वेऽर्धे परे षष्ठो लार्यागाथेत्येवं छन्दोनुशासनलक्षितानि । **वक्त्रं यथा**

१. 'धिनोति' स्यात्. २. प्रमादपतितं स्यात्.

धीरप्रशान्तस्य गाम्भीर्यगुणोत्कर्षोत्स्वयं स्वगुणोपवर्णनं न संभवती-त्यर्थोऽस्यां धीरोद्धतादिना नायकेन स्वकीयवृत्तं सदाचाररूपं चेष्टितं कन्यापहारसंग्रामसमागमाभ्युदयभूषितं मित्रादि वा व्याख्यायते, अनागतार्थशंसीनि च वक्त्रापरवक्त्रार्यादीनि यत्र बध्यते, यत्र चावान्तरप्रकरणसमाप्तावुच्छ्वासा बध्यन्ते, सा संस्कृतभाषानिबद्धा अपादः पदसंतानो गद्यं तेन युक्ता । युक्तग्रहणादन्तरान्तरा प्रविरलपद्यनिबन्धेऽप्यदुष्टा आख्यायिका । यथा—हर्षचरितादि ।

**धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा ।**

आख्यायिकावन्न स्वचरितव्यावर्णकोऽपि तु धीरशान्तो नायकः । तस्य तु वृत्तमन्येन कविना वा यत्र वर्ण्यते, सा च काचिद्गद्यमयी । यथा—कादम्बरी । काचित्पद्यमयी । यथा—लीलावती । यावत्सर्वभाषा काचित्संस्कृतेन काचित्प्राकृतेन काचिन्मागध्या काचिच्छूरसेन्या काचित्पैशाच्या काचिदपभ्रंशेन बध्यते सा कथा ।

प्रबन्धमध्ये परप्रबोधनार्थं नलाद्युपाख्यानमिवोपाख्यानमभिनयन् पठन् गायन् यदेको ग्रन्थिकः कथयति तद्गोविन्दवद्**आख्यानम्** ।

तिरश्चामतिरश्चां वा चेष्टाभिर्यत्र कार्यमकार्यं वा निश्चीयते तत्पञ्चतन्त्रादिवत् धूर्तविटकुट्टिनीमतमयूरमार्जारिकादिवच्च **निदर्शनम्** ।

---

हर्षचरिते—'निजवर्षाहितस्नेहा बहुभक्तजनान्विता । सुकाला इव जायन्ते प्रजाः पुण्येन भूभृतः ॥' अपरवक्त्रं यथा—'तरलयसि दृशं किमुत्सुकामकलुषमानसवाससलालिते । अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम् ॥' आर्या यथा—'सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे । विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे ॥' **उपाख्यानमिति** । यदाह—'नवसाधिश्रीषोडशराजोपख्यानचरप्रधावन्तः । अन्यप्रबोधनार्थं यदुपख्यानं ह्युपाख्यानम् ॥' **आख्यानमिति** । तथा चाह—'आख्यानकसंज्ञां तल्लभते यद्यभिनयन् पठन् गायन् । ग्रन्थिक एकः कथयति गोविन्दवदवहिते सदसि ॥' **निदर्श-**

१. 'वद स्यात्.

प्रधानमधिकृत्य यत्र द्वयोर्विवादः सोऽर्धप्राकृतरचिता चेटकादिवत्प्रवह्लिका ।

प्रेतमहाराष्ट्रभाषया क्षुद्रकथा गोरोचनानङ्गवत्यादिवन्मतल्लिका । यस्यां पुरोहितामात्यतापसादीनां प्रारब्धानिर्वाहे उपहासः सापि मतल्लिका ।

यस्यां पूर्वं वस्तु न लक्ष्यते पश्चात्तु प्रकाश्यते सा मत्स्यहसितादिवन्मणिकुल्या ।

एकं धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णनप्रधाना शूद्रकादिवत्परिकथा ।

मध्यादुपान्ततो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्यां वर्ण्यते सेन्दुमत्यादिवत्खण्डकथा ।

समस्तफलान्तेतिवृत्तवर्णना समरादित्यवत्सकलकथा ।

एकतरचरिताश्रयेण प्रसिद्धकथान्तरोपनिबन्ध उपकथा ।

---

**नमिति** । तथा च—'निश्चीयते तिरश्चामतिरश्चां वापि यत्र चेष्टाभिः । कार्यमकार्यं वा तन्निदर्शनं पञ्चतन्त्रादि ॥ धूर्तविटकुट्टनीमतमयूरमार्जारिकादिकं लोके । कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि ॥' **प्रवह्लिकेति** । तथा च—'यत्र द्वयोर्विवादः प्रधानमधिकृत्य ज्ञायते सदसि । सार्धप्राकृतरचिता प्रवह्लिका चेटकप्रभृति ॥' **मन्थल्लिकेति** । तथा च—'क्षुद्रकथा मन्थल्ली प्रेतमहाराष्ट्रभाषया भवति । गोरोचनेव कार्या सानङ्गवतीव धार्कचेटीभिः ॥' **सापीति** । तथा च—'यस्यामुपहासः स्यात्पुरोहितामात्यतापसादीनाम् । प्रारब्धानिर्वाहे सापि हि मन्थल्लिका भवति ॥' **मणिकुल्येति** । तथा च—'मणिकुल्यायां जलमिव च लक्ष्यते यत्र पूर्वतो वस्तु । पश्चात्प्रकाशते सा मणिकुल्यामिवोदिः ॥' **परिकथेति** । तथा च—'पर्यायेण बहूनां यत्र प्रतियोगिनां कथाः कुशलैः । श्रूयन्ते शूद्रकवज्जिगीषुभिः परिकथा सा तु ॥' **खण्डकथेति** । तथा च—'ग्रन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः । मध्यादुपान्ततो वा सा खण्डकथा यथेन्दुमती ॥' **सकलकथेति** । चरितमित्यर्थः ॥ **उपकथेति** । तथा च—'यत्राश्रित्य कथान्तरमतिप्रसिद्धं निबध्यते कविभिः । चरितं विचित्र-

---

१. 'तत्रादि' मूले. २–३–४. 'मत' स्याद्. ५. 'मत्स्यहसितादिः' मूलानुरोधात्.

लम्भाङ्किताद्भुतार्था नरवाहनदत्तादिचरितवद्बृहत्कथा।

एते च कथाप्रभेदा एवेति न पृथग्लक्षिताः।

**गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः।**

संस्कृताभ्यां गद्यपद्याभ्यां रचिता प्रायेण यान्यङ्कानि स्वनाम्ना परनाम्ना वा कविः करोति तैर्युक्ता उच्छ्वासनिबद्धा चम्पूः। यथा वासवदत्ता दमयन्ती वा।

**अनिबद्धं मुक्तकादि।**

मुक्तक-संदानितक-विशेषक-कलापक-कुलक-पर्याकोश-प्रभृत्यनिबद्धम्।

एषां लक्षणमाह—

**एकद्वित्रिचतुश्छन्दोभिर्मुक्तकसंदानितकविशेषककलापकानि।**

एकेन च्छन्दसा वाक्यार्थसमाप्तौ मुक्तकम्। यथा अमरुकस्य शृङ्गारशते रसस्यन्दिनो मुक्तकाः। द्वाभ्यां संदानितकम्। त्रिभिर्विशेषकम्। चतुर्भिः कलापकम्। एतानि च विशेषानभिधानात्सर्वभाषाभिर्भवन्ति।

**पञ्चादिभिश्चतुर्दशान्तैः कुलकम्।**

छन्दोभिरिति वर्तते। मुक्तकानामेव प्रघट्टकोपनिबन्धः। अवान्तरवाक्यसमाप्तावपि वसन्ताद्येकवर्णनीयोद्देशेन मुक्तकानामुपनिबन्धः। पर्यासा कोशेषु प्रचुरं दृश्यते। स्वपरकृतसूक्तिसमुच्चयः कोशः। यथा सप्तशतकादिः। एकप्रघट्टके एककविकृतः सूक्तिसमुदायो वृन्दावनमेघदूतादिः संघातः। विप्रकीर्णवृत्तानामेकत्र संधानं यदुवंशदिलीपवंशादिवत्संहिता। एवमनन्तोऽनिबद्धगणः स आदिग्रहणेन गृह्यते। इह च सत्संधित्वं शब्दार्थवैचित्र्ययोगश्च महाकाव्यवदाख्यायिकाकथाचम्पूष्वपि द्रष्टव्यः॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तावष्टमोऽध्यायः समाप्तः।

---

मन्यत्सोपकथा चित्रलेखादिः॥' बृहत्कथेति। तथा च—'लम्भाङ्किताद्भुतार्था पिशाचभाषामयी महाविषया। नरवाहनदत्तादेश्चरितमिव बृहत्कथा भवति॥'

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेकेऽष्टमोऽध्यायः।

समाप्तोऽयं ग्रन्थः।

# अकाराद्यनुक्रमेण सटीककाव्यानुशासनोदाहरणानुक्रमणिका।



२. अस्यामनुक्रमणिकायां यत्र यत्र पङ्क्तौ '(टी.) एतच्चिह्नमुपलभ्यते, तदुदाहरणं टीकाणामन्वेषणीयम्. यत्र च पङ्क्तौ चिह्नं नास्ति, तदुदाहरणं मूले मृग्यम्.